

**प्रथमः पाठः**

# अकारान्त-पुँल्लिङ्गः



एषः कः?
एषः चषकः।
किम् एषः बृहत्?
न, एषः लघुः।

सः कः?
सः सौचिकः।
सौचिकः किं करोति?
किं सः खेलति?
न, सः वस्त्रं सीव्यति।





एतौ कौ?
एतौ शुनकौ स्तः।
किम् एतौ गर्जतः?
न, एतौ उच्चैः बुक्कतः।

तौ कौ?
तौ बलीवर्दौ स्तः।
किं तौ धावतः?
न, तौ क्षेत्रं कर्षतः।









एते के?
एते स्यूताः सन्ति।
किम् एते हरितवर्णाः?
नहि, एते नीलवर्णाः सन्ति।

ते के?
ते वृद्धाः सन्ति।
किं ते गायन्ति?
नहि ते हसन्ति।





## शब्दार्थाः

| | | | |
|---|---|---|---|
| **चषकः** | – | गिलास | glass |
| **बृहद्** | – | बड़ा | large |
| **सौचिकः** | – | दर्जी | tailor |
| **खेलति** | – | खेलता है | play |
| **सीव्यति** | – | सिलाई करता है | sews |
| **शुनकौ** | – | दो कुत्ते | two dogs |
| **गर्जतः** | – | गरजते हैं | roar |
| **उच्चैः** | – | जोर से | loudly |





| | | | |
|---|---|---|---|
| **एतौ** | – | ये दोनों | these two |
| **बुक्कतः** | – | भौंकते हैं | bark |
| **बलीवर्दौ** | – | दो बैल | two oxen |
| **धावतः** | – | दौड़ते हैं | run |
| **कर्षतः** | – | जोतते हैं, जोत रहे हैं | plough |
| **वृद्धाः** | – | बूढ़े | old men |
| **गायन्ति** | – | गाते हैं, गायन करते हैं | sing |
| **हसन्ति** | – | हँसते हैं | laugh |
| **स्यूताः** | – | थैले | bags |
| **हरितवर्णाः** | – | हरे रंग के | of green colour |
| **नीलवर्णाः** | – | नीले रंग के | of blue clour |

## अभ्यासः



1. (क) उच्चारणं कुरुत।

| | | |
|---|---|---|
| छात्रः | गजः | घटः |
| शिक्षकः | मकरः | दीपकः |
| मयूरः | बिडालः | अश्वः |
| शुकः | मूषकः | चन्द्रः |
| बालकः | चालकः | गायकः |



## (ख) चित्राणि दृष्ट्वा पदानि उच्चारयत।


कृषकः


वृषभः


भल्लूकः


मण्डूकः


कपोतः


पर्यङ्कः


दूरभाषः


काकः


सौचिकः

## 2. (क) वर्णसंयोजनेन पदं लिखत-

यथा- च् + अ + ष् + अ + क् + अः = **चषकः**

स् + औ + च् + इ + क् + अः = ______

श् + उ + न् + अ + क् + औ = ______

ध् + आ + व् + अ + त् + अः = ______









व् + ऋ + द् + ध् + आः = [ ]

ग् + आ + य् + अ + न् + त् + इ = [ ]

## (ख) पदानां वर्णविच्छेदं प्रदर्शयत-

यथा- लघुः = ल् + अ + घ् + उः
ल घुः

सीव्यति = ..................................................

वर्णाः = ..................................................

कुक्कुरौ = ..................................................

मयूराः = ..................................................

बालकः = ..................................................

## 3. उदाहरणं दृष्ट्वा रिक्तस्थानानि पूरयत-

| | | |
|---|---|---|
| यथा- चषकः | चषकौ | चषकाः |
| ................ | बलीवर्दौ | ................ |
| शुनकः | ................ | ................ |
| ................ | ................ | मृगाः |
| ................ | सौचिकौ | ................ |
| मयूरः | ................ | ................ |

## 4. चित्राणि दृष्ट्वा संस्कृतपदानि लिखत-


.....................


.....................


.....................







........................



........................



........................

**5. चित्रं दृष्ट्वा उत्तरं लिखत-**

**यथा-** बालकः किं करोति?

**बालकः पठति।**



अश्वौ किं कुरुतः?

.......................................



कुक्कुराः किं कुर्वन्ति?

.......................................







छात्रौ किं कुरुतः?
..................................



कृषकः किं करोति?
..................................



गजौ किं कुरुतः?
..................................



## 6. पदानि संयोज्य वाक्यानि रचयत-

| | |
|---|---|
| गजाः | नृत्यन्ति |
| सिंहौ | गायति |
| गायकः | पठतः |
| बालकौ | चलन्ति |
| मयूराः | गर्जतः |



**7. मञ्जूषातः पदं चित्वा रिक्तस्थानानि पूरयत-**

| | | | | | |
|---|---|---|---|---|---|
| नृत्यन्ति | गर्जतः | धावति | चलतः | फलन्ति | खादति |

(क) मयूराः ..............।
(ख) गजौ ..............।
(ग) वृक्षाः ..............।
(घ) सिंहौ ..............।
(ङ) वानरः ..............।
(च) अश्वः ..............।

**8. सः, तौ, ते इत्येतेभ्यः उचितं सर्वनामपदं चित्वा रिक्तस्थानानि पूरयत-**

यथा- अश्वः धावति - **सः** धावति।

(क) गजाः चलन्ति। - .............. चलन्ति।
(ख) छात्रौ पठतः। - .............. पठतः।
(ग) वानराः क्रीडन्ति। - .............. क्रीडन्ति।
(घ) गायकः गायति। - .............. गायति।
(ङ) मयूराः नृत्यन्ति। - .............. नृत्यन्ति।

## ध्यातव्यम्

(क) संस्कृते त्रीणि लिङ्गानि भवन्ति- पुँल्लिङ्गं, स्त्रीलिङ्गं, नपुंसकलिङ्गञ्च।
(ख) संस्कृते त्रयः पुरुषाः भवन्ति- प्रथमपुरुषः, मध्यमपुरुषः, उत्तमपुरुषश्च।
(ग) संस्कृते त्रीणि वचनानि भवन्ति- एकवचनं, द्विवचनं, बहुवचनञ्च।



